

SAPTHAGIRI (SANSKRIT)
ILLUSTRATED MONTHLY
Volume:9, Issue:3
June-2022, Price Rs.5/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

सचित्रमासपत्रिका

जून्, २०२२ रू/- ५/-

वज्रकवचसमर्पणम्
(१२-०६-२०२२)

मुत्तङ्गिकवचसमर्पणम्
(१३-०६-२०२२)

स्वर्णकवचसमर्पणम्
(१४-०६-२०२२)

SIVAPRASAD

## तिरुमल श्रीस्वामिनः ज्येष्ठाभिषेकमहोत्सवः

(१२-०६-२०२२ तः १४-०६-२०२२ पर्यन्तम्)

**दि.१५.०४.२०२२ ओण्टिमिट्ट श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवाङ्गकल्याणोत्सवे आन्ध्रप्रदेशराष्ट्रप्रभुत्वपक्षतः वस्त्राभरणीदीनां समर्पकाः आन्ध्रप्रदेशस्य मुख्यमन्त्रिवर्याः श्री वै.यस्.जगन्मोहन् रेड्डि महोदयाः। तत्र च ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वी.सुब्बारेड्डि दम्पती तदितरोन्नताधिकारिणश्च भागं गृहीतवन्तः।**












# गीतामृतम्

अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः।। (भगवद्गीता ३८/१)

अर्जुनः श्रीकृष्णं प्रति वदति, ''हे कृष्ण! अधिकतया पापस्य वर्धनात् कुलस्त्रियः दुष्टा भवन्ति। हे वार्ष्णेय! स्त्रीषु दुष्टासु स्वाचारभ्रष्टासु सतीषु अन्योन्यं ब्राह्मणादीनां वर्णसाङ्कर्यं जायते। अतः तादृशानर्थदायकं पापदायकं युद्धं न करोमि'' इति।

# सङ्कीर्तनम्



करेण किं मां गृहीतुं ते
हरे फणिशय्या सम्भोग
जले तव सञ्चरण मिहाधः
स्थले भवनं तव सततं
बले रूपप्रकटनमतुला
चले स्थानं चल चल रमण(।) ।।करेण।।

पदे भुवन प्रामाण्यं तव
हृदे प्रचुरविहरणमिदं
मुदे मुनीनां मोहनं तनुं
मदे तव नर्म च मां विसृज ।।करेण।।

स्मरे विजयस्तव विमलतुरग
खुरे रतिसङ्कुलरचन
पुरे तव विस्फुरणं वेङ्कट
गिरेः पते ते खेलाघटित ।।करेण।।

(अन्नमाचार्यसङ्कीर्तनम्)

# निर्माल्यम्

सम्पादकीयम्

तिरुमलगिरिः नित्यकल्याणसौधरूपेण अनवरतं शोभते। तत्र प्रतिदिनमपि प्रातःकालीनसुप्रभातसेवातः आरभ्य रात्रिकालीन-एकान्तसेवापर्यन्तमपि नित्य-वार-पक्ष-मास-संवत्सरोत्सवेष्वपि नानाविधपुष्पाणि नानाविधमालारूपेण परिकल्प्य स्वामिनम् अलङ्कुर्वन्ति। तानि सर्वाण्यपि पुष्पाणि स्वकीयपरिमलेन स्वामिनमानन्दयन्तीति भाति।

''अलङ्कारप्रियो विष्णुः'' इत्युक्तरीत्या विष्ण्वभिन्नः श्रीनिवासः अलङ्कारप्रियः। तत्र च पुष्पालङ्कारः विशिष्यते। तिरुमलक्षेत्रस्य 'पुष्पमण्टपः' इति प्रशस्तेः 'पूल अर' प्रधानप्रमाणत्वेन वर्तते। एवं श्रीवेङ्कटेश्वरस्वामिनः प्रतिनित्यम् आचर्यमाणं पुष्पकैङ्कर्यं ''यमुनोत्तरै'' नाम्ना निर्वहन्ति। 'यमुनोत्तरै' इत्यत्र विशेषेण सम्बद्धाः प्रसिद्धाः अनन्ताळ्वार् महाभागाः।

श्रीश्रीनिवासस्य पुष्पकैङ्कर्यार्थमेव तिरुमलदिव्यक्षेत्रे नानापुष्पजातिभिः युक्तानि नन्दनवनानि, दिव्यवनानि च बहूनि वर्तन्ते। तेषु वनेषु समजनितपुष्पैरेव श्रीस्वामिनः कैङ्कर्याय मालाः निर्मीयन्ते। तिरुमलक्षेत्रे इतरदेवतापूजार्थं तथा ति.ति.दे. अनुबन्धालयेषु अपि तत्तद्देवतापूजार्थमपि एतान्येव पुष्पाणि उपयुज्यन्ते। तदेवं कैङ्कर्यार्थम् अलङ्कृतानि पुष्पाणि तिरुमलक्षेत्रे 'बङ्गारु बावि' स्थले स्थापयन्ति। तिरुमलक्षेत्रीयपुष्पाणि केवलं भगवतः सेवार्थमेव न तु इतरार्थम्। अलङ्काररूपेण श्रीश्रीनिवासाय समर्पितानि पुष्पाणि, पुष्पमालाश्च भक्तेभ्यः न यच्छन्ति। सः अत्रत्यः सम्प्रदायः।

एवं सत्यपि पुष्पनिर्माल्यं व्यर्थं न भवेदिति सदुद्देशेन ति.ति.दे. पक्षतः एका महत्तरप्रणाली रचिता तेषां पुष्पाणाम् उपयोगाय। तदङ्गत्वेनैव निर्माल्यस्योपयोगेन ड्रै फ्लवर् टेक्नालजी उपयुज्य फोटो फ्रेम्स्, की चैन्स्, पेपर् वेयिट्स्, चिह्नानि, लोखनीः इत्यादिकान् पदार्थान् उत्पादयित्वा लोकसम्मुखमानीतवन्तः। एते सर्वेऽपि पदार्थाः ति.ति.दे. प्रधानकेन्द्रेषु विक्रय-प्रदर्शनशालासु स्थापिताः वर्तन्ते।

एवंप्रकारेण श्रीश्रीनिवासस्य पुष्प-मालादिनिर्माल्यम् उपयुज्य निर्मितानि वस्तूनि अस्माकं गृहेषु स्थापयामः चेत् साक्षात् श्रीनिवास एव गृहेषु स्वविभूतिरूपेणैकेन अस्माभिः सहैव अस्तीति अनुभूतिः लभ्यते। प्रशान्तप्रकृतिं, मनसः शान्तिं, मानसिकं-शारीरकं आरोग्यमपि एतानि वस्तूनि वर्धापयन्ति इत्यत्र नास्ति सन्देहः। अतः भक्ताः समेऽपि इमं सदवकाशं मत्वा एतेषां पदार्थानां विनियोगेन पुनीताः भवन्ति इत्येव ति.ति.दे. 'सप्तगिरि' पत्रिकायाः मुख्याशयः।



*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका

सम्पुटिः-०९ सञ्चिका-०३

# जून् २०२२

श्रीशुभकृत्संवत्सरस्य ज्येष्ठशुक्लद्वितीयातः
श्रीशुभकृत्संवत्सरस्य आषाढशुक्लप्रथमापर्यन्तम् - १९४३





# सप्तगिरिः

गौरवसम्पादकः-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.), ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

**मुखचित्रम् –** श्रीश्रीनिवासस्य उत्सवमूर्तिः, तिरुमल।
**अन्तिमरक्षापुटः –** गोविन्दराजस्वामिनः उत्सवमूर्तिः, तिरुपति।

**सूचना**
मुद्रितलेखानां विचाराः लेखकानामेव।
एतद्विषये अस्माकं दायित्वं नास्ति।
– *प्रधानसम्पादकः*

**सङ्केतः**
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



# को नाम योगः?

## सामान्यजनेभ्यो योगाभ्यासः योग्यो वा?

- डा. धनेशः पि.वि.
चरवाणी - ८८९३००८६८६



अस्माकं भारतीयानां कृते महतः गर्वस्य तथा स्वाभिमानस्य च विषयः वर्तते यत्, योग इति भारतीयमेकं शास्त्रं सर्वस्मिन्नपि विश्वे अपेक्षिताङ्गीकारेण सादरातिशयैश्च स्वीकृत इति। विश्वयोगदिनमिति नाम्ना दिनमेकं परिलक्ष्य योगाभ्यासस्य प्रसारश्च ततः सम्पन्नः। जून् मासस्य एकविंशे दिनाङ्के एतस्य योगादिनस्य आचरणेन भारतीयसंस्कृतेः प्रचारोऽपि जायमानः अस्ति। योगाभ्यासानाम् अनुष्ठानेन जीवने सकारात्मकपरिवर्तनं जायते इति बहुभिः परीक्षणनिरीक्षणैः अनुसन्धानप्रकारेण च साधितमस्ति। एतानि परिणामानि शारीरिकविषयेषु, मानसिकविषयेषु, सामाजिकविषयेषु च परिवर्तनमानेतुं शक्यानि इति विज्ञापयति। परन्तु आध्यात्मिकरीत्या जायमानप्रभावविषये परीक्षणरीत्या अनुसन्धानं कर्तुमशक्यत्वात् नैतावता तानि अङ्गीकृतानि। आत्मसम्बन्धविचारेषु चार्वाकवदनुसरताम् आधुनिकानां मौढ्यमेव आध्यात्मिकसम्बद्धप्रयोजनासाधने हेतुरिति स्पष्ट एव। अथापि योगस्य वैज्ञानिकानां प्रायोगिकांशानां स्वीकारे विमतिर्नास्तीति श्लाघनीयश्च विषयः।

नुतनानां वस्तूनां निर्माणम् अथवा अपेक्षितरीत्या मानवजीवनविकासाय यन्त्रादीनां परिकल्पनम् इत्यादिकं कुर्मः खलु। एवं आधुनिकरीत्या वा भवतु मानवानाम् मनीषा सुखसम्पादनप्रसङ्गे अस्ति। सुखसम्पादनम् इत्युक्ते दुःखनिवारणेनैव सम्भवति इति च निश्चप्रचम्। अत एव सर्वविधदुःखनिवारणमेव परमो धर्म इति प्रत्यभिज्ञाय अस्माकं पूर्वजाः सर्वविधबन्धनात् मोचनाय मुक्तिः इति शब्दप्रयोगेण कञ्चन साधनामार्गं प्रकाशितवन्तः। आत्मज्ञानेन एव मुक्तिर्भवतीति हेतोः तदर्थमनेके मार्गाश्च समागताः। ते मोक्षसाधकमार्गा एव दर्शनशब्दवाच्याः। वस्तुतः योगः स्थितेषु षट्सु आस्तिकदर्शनेषु अन्यतमत्वेन वर्तते। इतः अवगन्तव्यमस्ति योगस्य मुख्यमुद्देश्यं मुक्तिरेवास्ति इति।

एवं योगस्य मुख्यमुद्देश्यं आत्मावबोधेन मुक्तिरस्ति तर्हि एते संशयाः प्रायशः समायान्ति - ननु अस्माभिः क्रियमाणो योगः साधुरेव वा? अथवा क्रियमाणेन आसनादियोगाभ्यासेन अकस्मात् शरीरपरित्यागतो स्वयं मुक्तो भवति वा? उत कालन्तरे मुक्तिः सिद्ध्यति वा? किम् एते अभ्यासाः वास्तविकतया मुक्तिं साधयन्ति वा? इत्यादयः। एतादृशानां संशयानामुद्भवे कारणमस्ति योगो नाम कः? इत्यत्र अनवधारणम्। एवं चेत् योगो नाम कः इति स्पष्टतया यदि अवगम्येत तर्हि एतादृशानां संशयानाम् उत्पत्तिरेव न भवति। अतः योगस्य को वा अर्थः? किं वा अत्र उद्दिष्टम्? उक्तानामभ्यासानां प्रयोगे को वा अधिकारी? इतः कस्य योगस्य अनुष्ठानमधुना चलति? यौगिकं जीवनं कथं भवेत्? अभ्यासे सति अवधेयांशाः के? किं वा अस्य अवान्तरं प्रयोजनम्? इत्येते अंशाः अधिगन्तव्याः सन्ति। एतेषामंशानामवगमनेन योगप्रयोगः कथं कार्य इति परिज्ञायेत। अतः एतेषां प्रतिपादनाय उपक्रमते।

**योगशब्दार्थः, योगसम्प्रदायाश्च -** भाषायां शब्दपरिज्ञानाय को वा धातुः प्रयुक्त इति विचिन्त्यते। अत्र योगशब्दव्युत्पादनाय धातुत्रयमस्ति। तत्र प्रथमः **युजिर् योगे** इति धातुः मेलनार्थकः बहुधा उपयुज्यमानः अस्ति। एनमर्थं मेलनरूपकं स्वीकृत्य बहवो योगसम्प्रदायाः प्रवृत्ताः सन्ति। भक्तेश्वरसंयोगप्रसङ्गेन भक्तियोगः, इडापिङ्गलयोः योगेन हठयोगः, प्राणापानयोर्योगेन

कुण्डलिनीयोगः जीवात्मपरमात्मयोगेन ज्ञानयोगः इत्येते योगसम्प्रदायाः तत्र प्रसिद्धाः। एवं योगशब्दव्युत्पत्तौ **युज समाधाविति** समाध्यर्थकः कश्चन धातुरस्ति स एव मुख्यः, यतो हि योगदर्शनस्य एतदेव अभिमतमर्थमिति पातञ्जलयोगसूत्रस्य व्यासभाष्ये स्पष्टयति। समाधिः नाम बुद्धेरपरिणामरूपः कश्चन अवस्थाविशेष। एव, स तु साधनारूपः, यश्च एकाग्राभ्यासेन वैराग्यभावनया च सम्पादनीयः अस्ति। अतः समाधिरिति साधनया मुक्तो भवति साधक इति दार्शनिकं तथ्यं योगस्य।

योगसम्प्रदायेषु योगशब्दव्युत्पत्तिं प्रदर्श्य केचन सम्प्रदायाः निरूपिताः। अपरे च विविधसाधनाभेदान् प्रधानाङ्गत्वेन परिकल्प्य प्रवृत्तास्सन्ति। यथा, मन्त्रयोगः अष्टाङ्गयोगे नियतान्तर्गत-स्वाध्यायांशतः प्रवृत्तः अस्ति। एवं ईश्वरप्रणिधानमिति योगसूत्रोक्तं मुख्यसाधनमेव भक्तियोगे प्रयोजयति। एवं इडापिङ्गलयोर्योगेन शरीरे मध्ये विद्यमानायां सुषुम्नायां यदा प्राणः प्रविशति तदा सहसोत्थिता सा कुण्डलिनीशक्तिरिति भण्यते, तस्याः प्रयोगवशात् सोप्यन्तः सम्प्रदायः समुत्पन्नः। इत्येवंरीत्या नैके सम्प्रदायाः योगस्य सन्ति इत्यतः कः योगः ननु क्रियमाणः अस्ति? इति ज्ञात्वैव फलविचिन्तनं करणीयम्।

**किमुद्दिष्टं योगेन -** मुक्तिरेव दार्शनिकपद्धत्या योगस्य उद्देश्यम्, एतदेव मुख्यम्। परन्तु योगशब्दस्य मेलनरूपार्थं स्वीकृत्य प्रवृत्तानां सम्प्रदायभेदानामुद्देश्यं भिन्नं भिन्नमेव स्यात् इति अवगन्तव्यम्। अतः साधकस्य श्रद्धा तावत्, स्वयं को वा योगः प्रयुज्यमानः अस्ति इति सम्यक् ज्ञात्वा परिकल्पनीयं भवति किमुद्दिष्टं साधयितुमारब्धमिति। यतो हि भक्तियोगसाधकः ईश्वरे परमप्रेमरूपभक्त्या ऐक्यभावेन स्थास्यति। परन्तु हठयोगिनः क्रियाभ्यासैः शरीरं शुद्धीकृत्य आसनप्राणायामादिभिः शक्तिं संवर्धयित्वा, मुद्रादिभिः मनसः नियन्त्रणाय शक्तिमासादयनति। एवं हठयोगसाधनया सम्पादितमनस्स्थैर्यवशात् अष्टाङ्गानां प्रसिद्धनां राजयोगपदवाच्यानामनुष्ठाने योग्यता आयाति। इत्थं हठयोगो राजयोगाय इति हठप्रदीपिकायाः मङ्गलश्लोकमेव प्रमाणयति। अतः योगस्य उद्देश्यं सम्प्रदायभेदेन भिन्नं भवतीति सिद्धम्।



**योगे कः अधिकारी -** उक्तसाधनं कर्तुमथवा तत्रोक्तफलमनुभोक्तुं योग्यो भवति अधिकारी। योगस्य नाना सम्प्रदायाः सन्ति इत्युक्ते सम्प्रदायेषु भेदानुसारं अधिकारिभेदोऽप्यायाति इत्यवगन्तव्यम्। अतः भक्तियोगे ईश्वरविश्वासेन विद्यमानसाधकः अधिकारी भवति। हठयोगे गुरुवाक्यविश्वासेन कुम्भकादिकं कर्तुं सिद्धः भवति अधिकारी। इत्येवं तत्तदुक्तसाधनं कर्तुम् उद्दिष्टः साधकः अधिकारी इति फलितम्। एतेन योगे साधकस्य शक्तिर्वा मानसेच्छा वा मापिता अस्ति, अपि तु इतरदर्शनवत् लिङ्ग-वर्ण-कुलादिकं अधिकारिप्रसङ्गे नानयति। अत एव प्राचीनकालादद्यप्रभृति योगस्य प्रथा एधमानैवास्ति।

**कस्य योगस्य अनुष्ठानमधुना चलति -** अस्मिन् काले उक्तेषु सम्प्रदायभेदेषु कस्य योगसम्प्रदायस्य अनुष्ठानं प्रचलति इति अवश्यं ज्ञातव्यः अंशः अस्ति। यतो हि एतदनुसारमेव किं जायमानमस्तीत्यत्र स्पष्टता सम्भवति। प्रागुक्तयोगसम्प्रदायेषु कस्यापि सम्प्रदायस्य साक्षात् प्रयोगः अधुनातनकाले न क्रियते। इतः साङ्कर्येण प्रतिदिनजीवने प्रयोक्तुं शक्यानामेव आभ्यासानां प्रयोग एव क्रियमाणः अस्ति। अत्र सम्प्रदायोक्तरीत्या अधिकारी साक्षात्

न भवति चेदपि अभ्यासं कर्तुमिच्छया जातोऽयं साधकः अधिकारी इति कल्प्यते। एवं प्रसिद्धानां प्रयोगरूपिणां योगाभ्यासानां संयोजनं तावत् अपेक्षितरीत्या एव प्रकल्प्यते। अतः एतेषाम् अभ्यासेन क्लेशस्य उत्पत्तिरपि न भवेत्।

अधुना प्रार्थना, सङ्कल्पः इत्यंशद्वयेन योगाभ्यासमारभ्य क्रिया-आसन-प्राणायाम-ध्यानानां प्रयोग एव शारीरिकाभ्यासत्वेन उच्यते। एतेषु क्रियाः सर्वाः अपि सर्वदा न करणीयाः अपि तु अपेक्षितरीत्या अपेक्षितकाले एव करणीयाः। एवम् आसनानामनुष्ठाने श्रद्धा देया अस्ति। प्राणायामाभ्याससमये श्वासस्य स्तम्भनं कृत्वा क्रियमाणकुम्भकानामनुष्ठानाय आचार्यस्य शिक्षणमवश्यमपेक्षितमस्ति। अन्ते तु ध्याननिमित्तमभ्यासमपि कृत्वा समापयति चेत् सामान्यतया योगाभ्यासानुष्ठानं कृतमिति कथयितुं शक्यते। उक्तक्रममनुसृत्यैव करणीयमिति नियमः अपि वक्तुं शक्यः नास्ति, यतो हि विविधाचार्योक्तपरम्पराभेदेन क्रमभेदोऽपि समायात्येव।

**यौगिकं जीवनं कथं स्यात् -** प्रागुक्तानामभ्यसनं, प्रयोगः प्रतिदिनं क्रियते चेत् अलं न भवति। एतेन साकं अहिंसा-सत्यम्-अस्तेयः-ब्रह्मचर्यम्-अपरिग्रहः इत्येतेषां यमानां तथा शौचं-सन्तोषः-तपः-स्वाध्यायः-ईश्वरप्रणिधानम् इत्येतेषां नियमानां च परिपालनं शक्त्यनुसारं करणीयमस्ति। एवं रीत्या आहार-विहार-व्यवहाराणामुपरि अपि श्रद्धा देया अस्ति। सात्विकानामाहाराणां स्वीकारः राजसतामसानां च त्यागश्च करणीयः। तथा सत्सङ्गतिरेव योगमार्गप्रेयसे। त एते विस्तरभिया न प्रतिपाद्यन्ते।

**अभ्यासे सति अवधेयांशाः के -** आचरणशीलस्य शिक्षकस्य शिक्षणे समभ्यस्तानामेव अभ्यासानां प्रयोगः साधुरूपः।



योगाभ्यासस्तावत् आयुर्वेदवत् शरीरभेदमनुसृत्य श्रद्धया करणीयः अस्ति। सामान्यतया केचन अभ्यासाः इत्थं फलप्रदायका इति वक्तुं शक्नुमश्चेदपि, अभ्यासकरणात् प्राक् वैयक्तिकसमस्यानुगुणं कर्तुं शक्यानामेव अभ्यासो उपयोगदः। अतः लिखितं वा श्रुतम् अनुसृत्य अभ्यासो न विधेयः। अत्र योगाभ्यासाय स्वस्यैव शरीरस्य, मनसः, प्राणानाम्, इन्द्रियाणां, बुद्धेः च उपकरणत्वेन प्रयोगः क्रियते इति हेतोः महत्या श्रद्धया अभ्यस्तव्यम्।

**योगस्य अवान्तरप्रयोजनानि -** उद्दिष्टमेव मुख्यं प्रयोजनमिति हेतोः अवान्तरप्रयोजनं किमित्येव चिन्तनीयम्। उक्तदिशा शरीरावयवानामुपकरणत्वेन प्रयोगः क्रियते इति कारणात् तेषामेवावयवानां पुष्टिः, तेन तेषां शुद्धिः तथा सिद्धिः च स्वतो भवति। अतः शरीरस्य आन्तरावयवानां पुष्ट्या आरोग्यसंवर्धनं भवति, मनसः शान्तिर्भवति, बुद्धिशक्तेः संवर्धनं भवति, तेन एकाग्रता च वर्धते, इन्द्रियशुद्धया तेषां सामर्थ्यमेधते, प्राणशक्तेरभिसंवर्धनेन सर्वांशेन वृद्धिश्च सम्भवति। इत्येवं शारीराणां मानसानाञ्च आध्यात्मिकदुःखानां निवृत्तिस्संभवति।

एतेन आत्मसम्बन्धविचाराय तदर्थमपेक्षित-ध्यानाद्यभ्यासाय च साधकस्य योग्यता जायते। इत्येवं क्रमशः अभिवृद्धिरेव शास्त्रेऽस्मिन् सूच्यते। अत्र साधकस्य स्थैर्यानुगुणमेव साधननिर्देशः प्रदत्त इति अभ्युगपन्तव्यम्। अतः ईश्वरविश्वासेन भावातिरेकशक्तिर्यस्य अस्ति सः भक्तिमार्गमनुसर्तुं योग्यः, स्वधर्मे कर्मणि एव दत्तश्रद्धः कर्मयोगी, हठयोगी इत्येवं परम्परानुयायिनो योगिनः। सामान्यजनस्य साक्षादत्र उक्तपरम्परासु प्रवेशाभावात् ये चाभ्यासाः प्रागुक्तास्सन्ति तेषां हि कस्यचिदाचार्यस्य शिक्षणे अभ्यासो श्रेयस्करः।

अस्मिन् काले योगस्य प्रथा बहु वर्धिता अस्ति इति हेतोः वस्तुस्थितिमज्ञात्वा श्रुतानुगुणं यत्किञ्चित्कृत्वा कस्यापि हानिर्न भवेदिति इच्छया एते अंशाः प्रतिपादिताः सन्ति। योगस्य परम्पराभेदवशात् अस्मदुक्तमेव सत्यम् अन्यत्सर्वमसाधुरस्ति इत्येवम् मौढ्येनान्यथा न चिन्तनीयमिति हेतोः इत्थमुच्यते। इतः योगो नाम कः इति आपादतः अवगम्यते चेत् श्रमोऽयं सफलो जातः।





वेदसंस्कृतौ गोमातुः महत्प्राधान्यं वर्तते। गोमातुः सकाशात् प्राप्यमाणानि गोमय-गोमूत्र-घृत-दधि-पयांसि पञ्चगव्यनाम्ना प्रसिद्धानि। एतत्पञ्चगव्यद्वारा ति.ति.दे. १५ विभिन्नान् आयुर्वेदीयपदार्थान् निर्माति।

# गव्यम् स्वास्थ्यरक्षकम्

## ति.ति.दे. पञ्चगव्योत्पत्तयः

(नमामि गोविन्द)

१. **धूपोत्पत्तयः -** अवनि धूपचूर्णम्, धरणि अगरबत्ति, धात्रि सांब्राणि कप्स्, वैष्णवि धूप् स्टिक्स् तथा वाराहि धूप् कोन्स् नामभिः पञ्चविधधूपोत्पत्तिः क्रियते। गोमयेन सह अगरु इत्यादिमूलिकाभिः निर्मितोऽयं धूपः रोगाणुविषाणुद्वारा आपद्यमानं वायुकालुष्यं निरस्य पवित्रताभावं प्रचोदयति।

२. **पृथ्वी-विभूतिः -** प्राचीनशास्त्रेषु उक्तरीत्या पञ्चभूतात्मकहोमकुण्डेषु गोमय-कर्पूर-गोघृत- दूर्वाभिः इदं वस्तु निर्मीयते। ललाटे अस्य धारणं मङ्गलदायकम्। अनेन आरोग्यमपि वर्धते।

३. **धन्सिक-दन्तचूर्णम् -** प्राचीनायुर्वेदशास्त्रे उक्तरीत्या गोमयभस्म-सैन्धवलवण-लवङ्ग- आमलकाद्यमूल्यमूलिकाभिः निर्मितं दन्तचूर्णमिदम्। अस्योपयोगेन मुख-दन्तादि सम्बद्धसमस्याः निवार्यन्ते।

४. **हिरण्मयि-हेर्बल् मुखरक्षकम् -** चर्मणः वर्णसौन्दयावर्धकहरिद्रा-मञ्जिष्ठादिमूलिकाभिः निर्मितस्य अस्य उपयोगेन मुखे नीलचिहानि, चक्षुषोः अधः नीलवलयाः व्रणादीनि च नश्यन्ति।

५. **महि हेर्बल् मलापकर्षकः -** गोमूत्र-अर्क-नाल्पमारादितैलादिभिः अमूल्यौषधैः निर्मितं प्रकृतिसिद्धमिदं वस्तु। अस्योपयोगेन चर्मणः कान्तिवर्धनं, चर्मरक्षणं, व्रणादिचर्मव्याधीनां नाशनं च सुकरं भवति। अयं मलापकर्षकः चर्मणः उपरि स्थितान् व्याधिकारकसूक्ष्मविषाणून् नाशयति।

६. **कश्यपि-हेर्बल् षाम्पू -** गोमूत्र-वेणीर-नारिकेलतैलादिमिश्रणेन निर्मितं एतत् वस्तु केशरक्षणाय महदुपकारकं भवति।

७. **नन्दिनि-गो अर्क -** गोमूत्रं प्रत्येकप्रक्रियया उष्णं कृत्वा तद्वारा आगतं बाष्पं शीतं कृत्वा द्रवरूपेण आविष्कृतोत्पत्तिरियम्। एनं पदार्थं प्रपञ्चव्याप्ततया क्यान्सर्- श्वासकोशकालेयादिव्याधिनिवारणचिकित्सादिषु विशिष्टौषधत्वेन स्वीकुर्वन्ति।

८. **उर्वि-नाजल् बिन्दवः -** गोमय-गोक्षीर-तिलतैलैः निर्मितान् बिन्दून् प्रतिदिनं प्रातः किञ्चिदिव उष्णान् कृत्वा नासिकायां बिन्दुद्वयं क्षिपामः चैत् शिरोवेदना, शैत्यरोगः अपि नश्यति। अस्योपयोगेन कर्णाभ्यां नेत्राभ्यां च पटुत्वं प्राप्यते।

९. **भूमि-हेर्बल् भूतलशोधकम् -** गोमूत्र-अर्कप्रधानद्रव्यत्वेन जम्बीरतृण-विशिष्टतैलयोः इदं निर्मीयते। भूतले विद्यमा नमलिनान् दूरीकरोति तथा सूक्ष्मजीवाणुसंहारमपि करोति। इदं सुगन्धभरितमपि वर्तते सुगन्धभरितमपि भवति।

१०. **क्षम - पिडकलु (शुष्कगोमयखण्डाः), ११. भुवति - कौडङ्ग लारस् (शुष्कगोमयदीर्घखण्डाः) -**

देशीयगोभिः सज्जीकृतं गोमयं, तण्डुलतुषं, काष्ठतुषमुपयुज्य निर्मितान् एतान् खण्डान् यज्ञयागादिषु स्वीकुर्वन्ति उपयोक्तुम्। दहनक्रियादिषु एषामुपयोगः श्रेष्ठः इत्यपि भावयन्ति।

**पञ्चगव्योत्पत्रयः, धूपकाष्ठानि तथा श्रीस्वामिनः फोटोफ्रेम्स् अधः निर्दिष्टप्रदेशेषु विक्रयन्ति। भक्ताः इदं सद्विनियोगं कुर्वन्तु इति सूच्यते।**

| क्रमसङ्ख्या | विक्रयकेन्द्रम् | प्रदेशः |
|---|---|---|
| १. | श्रीवारि लड्डू कौण्टर् काम्प्लेक्स् | |
| २. | श्रीस्वामिनः आलयस्य पुरतः | तिरुमल |
| ३. | लेपाक्षि एम्पोरियं पुरतः | |
| ४. | अन्नप्रसादं काम्प्लेक्स् | |
| ५. | ति.ति.दे. परिपालनाभवनस्य पुरतः, के.टि.रोड् | |
| ६. | श्री कपिलेश्वरस्वामिनः आलयप्राङ्गणम् | |
| ७. | ध्यानमन्दिरं स्टाल्(श्रीगोविन्दराजस्वामिरथस्य पार्श्वे) | |
| ८. | श्री गोविन्दराजस्वामिनः आलयप्राङ्गणम् | तिरुपति |
| ९. | विष्णुनिवासं वसति समुदायं स्टाल् | |
| १०. | श्री कोदण्डरामस्वामिनः आलप्राङ्गणम् | |
| ११. | श्रीनिवासं वसतिसमुदायं स्टाल् | |
| १२. | प्राचीदिशि रैल् वे स्टेशन् | |
| १३. | श्री पद्मावतीदेव्याः आलयप्राङ्गणम् | तिरुचानूरु |
| १४. | श्री कल्याणवेङ्कटेश्वरस्वामिनः आलयप्राङ्गणम् | श्रीनिवासमङ्गापुरम् |

**सूचना :-** तिरुमल श्रीस्वामिनः कैङ्कर्ये तथा इतरप्रमुखेषु ति.ति.दे.आलयेषु कैङ्कर्यार्थमुपयुक्तैः पुष्पैः फोटो प्रेम्स् तथा धूपकाष्ठानि च निर्मितानि। एतानि वस्तूनि अत्यन्तं पवित्राणि।

कार्यनिर्वहणाधिकारी
ति.ति.देवस्थानानि














# नमामि गोविन्द

**पञ्चगव्यम्** - गवा उत्पन्नाः पञ्च पदार्थाः तेषाम् औषधगुणवशात् आयुर्वेदे विस्तृततया 'पञ्चगव्य' नाम्ना प्रसिद्धाः। अतः अधुना ति.ति.दे. द्वारा सर्वजनानाम् उपकारकं 'पञ्चगव्यम्' उपयुज्य 'नमामि गोविन्द' इति अङ्कितेन पञ्चगव्यीयपदार्थनिर्माणं विक्रयणं च क्रियमाणम् अस्ति। तेऽपि पदार्थाः देशीयगोभिः सञ्जीकृतपदर्थैः सुरक्षिततया ति.ति.दे. द्वारा निर्मीयन्ते।

**धूपकाष्ठानि** - तिरुमलक्षेत्रे तथा तिरुपतिक्षेत्रे च ति.ति.दे. सम्बद्धालयेषु स्वामिने समर्पितपुष्पाणि (निर्माल्यम्) प्रतिदिनं स्वीकृत्य सप्तविधधूपकाष्ठानि निर्मातुं उपयुज्यन्ते।

**पुष्पप्रसादः** :- तिरुमल तथा तिरुपतिस्थैः ति.ति.दे. इतरदेवालयैः स्वीकृतानि स्वामिने समर्पितपुष्पाणि फोटो फ्रेम्, की चैन्, पेपर् वेयिट्, डालर् तथा पेन् स्टाण्ड् इत्यादि ड्रै फ्लवर् टेक्नालजी सम्बद्धनिर्माणेषु उपयुज्यन्ते।









तिरुमलतिरुपतिदेवस्थानानि

# पञ्चगव्योत्पत्तयः



**उर्वि नासल् ड्राप्स्**
शैत्यादिनिवारकं, नेत्रादि सामर्थ्यवर्धकश्च।

**भूमि हेर्बल् फ्लोर् क्लीनर्**
जीवाण्वादि नाशयति, भूमिं शुद्धीकरोति।

**नन्दिनी गौ-अर्क**
दैनन्दिनोपयोगेन आरोग्यवर्धकम्।

**क्षमा कौ डङ्ग् केक्स्**
यज्ञयागादिषु उपयुज्यते, वायुं शुद्धीकरोति।

**भुवति सौ डङ्ग् लाग्स्**
यज्ञयागादिषु उपयुज्यते, वायुं शुद्धीकरोति।

**अवनि धूपचूर्णम्**
सुगन्धं प्रसारयति, रक्षति च।

**धरणि अगरबत्ति**
भूमातुः सन्निहिता सुगन्धं ददाति।

**धात्रि साम्ब्राणि कप्स्**
आरोग्यं वर्धयति।

**वैष्णवि धूप् स्टिक्स्**
वायुं शुभ्रं करोति।

**वाराहि धूप् कोन्स्**
अस्य धूमः परिसरं पवित्रं करोति।

**पृथ्वी विभूति**
ईश्वरस्वरूपं वस्तु।

**धन्षिक हेर्बल् टूथ् पौडर्**
दन्तादीन् परिरक्षति।

**हिरण्मयि हेर्बल् फेस् प्याक्**
मुखस्य वर्णच्छायादीन् वर्धयति।

**महि हेर्बल् सोप्**
चर्म रक्षति।

**कश्यपि हेर्बल् षाम्पू**
केशान् रक्षति।




तिरुमलतिरुपतिदेवस्थानानि

# "श्रीस्वामिनः निर्माल्यपुष्पैः" निर्मिताः पदार्थाः

## फोटो फ्रेम्स् तथा की चैन्स् (ड्रै फ्लवर् टेक्नालजी उपयुज्य निर्मितानि वस्तूनि)




## धूपकाष्ठानि (स्वामिनिर्माल्येन निर्मितानि)



# बहुविस्तृता पृथ्वी



## पृथ्वी अथवा भूमाता

इदं नाम भूम्या तथा देव्या च सम्बद्धम्। सा च देवता हिन्दू-बौद्धमतयोः कासुचित् शाखासु गवा सम्बद्धा दृश्यते।

पृष्ठतः गोदर्शनं शुभप्रदं परिगण्यते। साहित्यपरतया, गोः पृष्ठभागस्य दृश्यं तस्याः मलद्वारादिषु दृष्टिम् आकर्षति। गोमयं, क्षीरं च गृहं परिरक्षति। गोमयं इन्धनादिरूपेण क्षीरं तु आहाररूपेण उपयुज्यते।

शास्त्रदृष्ट्या, गोः पृष्ठभागे सम्पदभिमानिनी लक्ष्मीः निवसति। सा च समस्तत्राणपरायणस्य श्रीमहाविष्णोः पत्नी। अत एव 'नमामि गोविन्द' उत्पत्तीनां नामानि भूदेव्याः पर्यायपदैः चितानि।



"गवां रक्षकः इति हेतुना एव श्रीमहाविष्णुं 'गोपालः' इति कीर्तयन्ति। तस्य वासस्थानमपि 'गोलोक' इति कथयन्ति। गोलोको नाम गवां वासस्थानमित्यर्थः।







भागः -१३

# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः - बि.गिरीशकुमारः
चरवाणी - ९९८९६५७५७६



(तदनन्तरम्)

श्रीमद्भगवद्गीतायां श्रीकृष्णः आत्मा अन्यः, देहः अन्यः इति नैकप्रकारेण विवृणोति। पदार्थान् सदसदिति विभज्य, तत्र कालत्रयेऽपि यद् भवति तद्वस्तु सदिति, यन्न भवति तदसदिति निरूपितवान्। तथा च आत्मा यः कालत्रयेऽपि भवति सः नित्यः इति, विनाशवन्तः देहादयः अनित्याः इति उक्त्वा अग्रिमश्लोकेन उपसंहरति।

**वेदाविनाशिनं नित्यं स एनमजमव्ययम्।**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम्॥**

(२-२१)

हे पार्थ! यः पुरुषः एनं जीवम् अव्ययम् = विनाशरहितम्, अजम् = जननशून्यम् नित्यम् वेद = जानाति, सः पुरुषः कं हन्ति, कं घातयति? कमपि न हन्ति न घातयति इति अर्थः।

अत्र एकः सन्देहः जायते। यथा ''वेदाविनाशिनं नित्यं'' इति श्लोकेन यदुक्तं जीवस्य नित्यत्वं तदेव ''न जायते म्रियते वा'' ''अविनाशि तु तद्विद्धि' इति श्लोकाभ्यामप्युक्तम्। सकृत् कथनेनैव आत्मनः नित्यत्वसिद्धौ कुतः मुहुर्मुहुः पठनम्? इति। यतो हि प्राज्ञां सिद्धस्यैव साध्ये पौनरुक्तिः इति दोषः भवति। परन्तु एवं न वक्तव्यम्। यतो हि - गायकः केवलं गीतमेव न गायति। अपि तु तस्मात् पूर्वं आलापनं, कीर्तनमित्यदीनि गायति। कुतः इति चेत् - केवलम् एकवारं गानश्रवणेन तत् मनसि स्थिरं न भवति। तथाच दाढ्यार्थमेव आदौ आलापनं, तदनु कीर्तनं, पश्चात् संगतिरित्यादीनां साहाय्यम् आवश्यकम्। विदुषामेव एकहोरात्मक! कालः भवति अवगन्तुम्, तर्हि सामान्यानां इतोऽपि समयः आवश्यकः भवति। सकृत् कथनेन नावगम्यते। यथा पिता पुत्राय विदुषां कथाः, महात्मनां गाथाः पुनः पुनः उपदिशति। कुतः इति चेत् स्वपुत्रस्य मनसि विषयदाढ्यार्थमेव। एवं माता अपि स्वपुत्रीं भर्तृगृहप्रेषणसमये स्वानुभवं सर्वमपि बोधयति। यतोहि भर्तृगृहे कथं भवितव्यमिति पुत्र्याः स्थिरज्ञानार्थम्। एवं लोके कष्टतराः विषयाः पुनः पुनः बोधिता एव भवन्ति। तथा च अलौकिकस्य जीवस्य विषये केवलं एकवारं अविनाशी, अव्ययः अज इति कथनात् ज्ञानं दृढं न भवति। अतः श्रीकृष्णः मुहुर्मुहुः उक्तवान्। अनेन आत्मविषयकज्ञानं कष्टसाध्यम् इति ज्ञात्वा अत्यन्तं सूक्ष्यमया विविच्य धारणीयमिति सूचितम्। एतदेव शास्त्रेषु ''न मन्त्राणां जामितास्ति'' इति कथयन्ति।

(अनुवर्तिष्यते)



आर्जवं हि कुटिलेषु न नीतिः।

# श्रीरङ्गवैभवम्

तेलुगु मूलम् -चक्रवर्ति रङ्गनाथन्

संस्कृतानुवादः आर्.यशवन्त दीक्षितुलु



श्रियःपतिः श्रीमन्नारायणः पर-व्यूह-विभव-अन्तर्यामि-अर्चारूपेण पञ्चधा विराजते। तत्रार्चावताररूपे सकलचेतनोज्जीवनाय चक्षुर्ग्राह्यो भगवान् दिव्यमङ्गलविग्रहः वसुधातले तत्तद्दिव्यक्षेत्रेषूषित्वा भक्ताननुगृह्णाति। तादृशक्षेत्राणि महात्मभिः दिव्यदेश-दिव्यतिरुपत्यभिधाभ्यां कीर्त्यन्ते। तानि सर्वाणि अष्टोत्तरशतं दिव्यक्षेत्राणि (१०८)। तेषु प्रथमं क्षेत्रं श्रीरङ्गक्षेत्रम्। तमिळसम्प्रदाये कोयिल् इति नाम्ना एतत् क्षेत्रं व्यवहरन्ति। इदानीं क्षेत्रस्यास्य क्षेत्रनाथस्य च महिमानं पश्यामः।

वयमवतरितश्रीमन्नारायणे स्वयं व्यक्ताष्टसु क्षेत्रेषु प्रथमक्षेत्रं भवति श्रीरङ्गम्। दिव्यदेशेष्वपीदं प्रथमं क्षेत्रम्। अस्य क्षेत्रस्य तिरुवरङ्गं, पेरियकोयिल्, भूलोकवैकुण्ठः, भोगमण्टपेति अभिधाः अपि सन्ति। अस्य आलयस्य घनचरित्रमपि वर्तते। अयम् च आलयः सहस्राधिकवर्षाणां चारित्रकवैभवं बोधयति। उभयकावेरीनद्योः मध्ये विराजमानद्वीपे १५६ योजनविस्तीर्णभूमण्डले सप्तप्राकारैः इदं क्षेत्रं शोभते। अस्यालयस्य राजगोपुरं आसियाखण्डे बृहत् गोपुरमिति कथयन्ति। इदं गोपुरं श्रीमदहोबिलमठाधीशैः श्रीश्रीश्री वेदान्तदेशिकयतीन्द्रमहादेशिकन् इति संज्ञकैः चतुश्चत्वारिंशत् तम (४४) पीठाधीशैः श्रीमदळगिय सिंगर् स्वामिभिः निर्मितं सत् प्रपञ्चख्यातिमवाप। उत्सवविशेषैः अलियोऽयं द्वाविशत्यधिकत्रिशतिः दिनानि राराजते। तमिलनाडुराज्ये तिरुच्चितः अष्टै(८) कि.मी दूरे आलयोऽयं प्रकाशते। अलयेऽस्मिन् रङ्गनाथः कथं विराजते इति श्लोकादस्मात् ज्ञायते।

सप्तप्राकारमध्ये सरसिजमुकुलोद्भासमाने विमाने
कावेरीमध्यदेशे मृदुतरफणिराट् भोगिपर्यङ्कभागे।
निद्रामुद्राभिरामं कटिनिकट शिरःपार्श्वविन्यस्तहस्तं
पद्माधात्रीकराभ्यां परिचितचरणं रङ्गराजं भजेऽहम्।।'' इति।।



सप्तप्राकारमध्ये प्रणवाकाविमानच्छायायां आदिशेषे निद्रामुद्रायां विराजमानं

श्रीरङ्गनाथं भजामहे इति श्लोकस्यार्थः। यथा रामकृष्णाद्यवताराणां क्षीराब्धिनाथः मूलकन्दः तथैव अर्चावताराणां मूलकन्दः श्रीरङ्गनाथ इति आर्योक्तिः। इदं क्षेत्रं साक्षात् श्रीवैकुण्ठं परमपदमिति भावयन्ति, तदर्थमेव

**कावेरी विरजा सेयं वैकुण्ठं रङ्गमन्दिरम्। स वासुदेवो रङ्गेशः प्रत्यक्षं परमं पदम्।**

इति कीर्त्यते।

स्थातुमशक्तैः आयुधविशेषैः ''आळवार्'' भक्तरूपेण अवतीर्णैः स्तोत्रादिभिः सेव्यमानः सन् लोकेभ्यः महदुपकारं व्यधायि। तेषु आळ्वार् भक्तेषु श्रीमन्तः नम्माळ्वार्, पेरियाळ्वार्, तिरुमङ्गै आळ्वार्, तिरुपाणि आळ्वार् महाभागाः प्रसिद्धाः। क्षेत्रे च अमुष्मिन् पाञ्चरात्रागमोक्तरीत्या नित्योत्सव-पक्षोत्सव-मासोत्सव- संवत्सरोत्सवाः सुचारुतया कुर्वन्ति। एकस्मिन् वत्सरे

अस्य क्षेत्रस्य वैशिष्ट्यं श्रीमन्निगमान्तदेशिकाः अधिकारसंग्रहे सम्यग्विवृण्वन्ति। अयमालयः नारायणस्य नाभिकमलवासिना ब्रह्मणा अयोध्याधिपतये इक्ष्वाकवे प्रसादितः। ततः पश्चात् ''इक्ष्वाकूणां कुलधनं'' इत्युक्त -रीत्या रामचन्द्रप्रभुणा राधितोऽयमालयः। समस्तपापानि अयं प्रक्षालयतीत्यमुं तिरुवरङ्गमित्याह्वयन्ति। स एवालयः श्रीरङ्गमित्यभिधया प्रमुख्यं प्राप्तः। रामचन्द्रेभ्यः चतुर्मुखब्रह्मणः आराध्यं श्रीरङ्गनाथं विभीषणः संप्राप्य लङ्कागमनवेलायां कावेरीतटे श्रीरङ्गनाथं संस्थाप्य, संध्यादिकं समाप्य पुनर्दर्शनावसरे रङ्गनाथं प्रणवाकारविमाने दृष्टवान्। तत्र स्थितं श्रीरङ्गनाथम् अवलोक्य तं नेतुं प्रयत्ने कृते सत्यपि तत्रस्थशक्तिवशात्, तस्य सङ्कल्पवशात् च तस्मात् श्रीरङ्गनाथः नागतः। अनन्तरं विभीषणः खिन्नमनस्कोऽभवत्। भगवान् दुःखितं विभीषणं सन्त्वयित्वा अनुगृहीतवान्। ततः प्रभृति श्रीरङ्गनाथः लोकानुजिघृक्षया श्रीरङ्गक्षेत्रे स्थित्वा स्वकीयलीलाविशेषेण सर्वान् रक्षति। भगवन्तं परित्यज्य

क्षेत्रेऽस्मिन् वारचतुष्टयं ब्रह्मोत्सवाचरणं कुर्वन्ति। मकरमासोत्सवस्य ''भूपतितिरुनाळ्ळु'' इति, कुम्भमासस्य उत्सवः भगवद्रामानुजार्यैः समारब्धः इति, मीनमासे चतुर्मुखब्रह्मणा समारब्ध उत्सवः इति मेषमासे प्रचाल्यमानोत्सवस्य विरुप्पन् तिरुनाळ्ळु इति च नामानि सन्ति। इतोऽपि क्षेत्रे सम्प्रदायं अनुसृत्य तान् सम्यगाचरन्ति। अत्र भक्ताः रङ्ग रङ्ग इति नाम स्मरन्तः परमानन्दडोलिकासु विहरन्ति।

श्रीनिगमान्तदेशिक, पराशरभट्टर् प्रभृतयः महात्मानः संस्तूय रङ्गनाथमहिमानं प्रशंसिताः। भगवद्ध्यानसोपानस्तोत्रे ''पादाम्भोजं स्पृशति भजते'' इत्ययं श्लोकः तथैव ''नयनं मधुरं, अधरं मधुरं, वदनं मधुरं'' इति वर्णितत्वात् श्रीरङ्गनाथावयवसौन्दर्यं सम्यक् स्फुटति। तदर्थं वयं सर्वेऽपि मङ्गलस्वरूपं, अनन्तकल्याणगुणगणं श्रीरङ्गक्षेत्राधिपं श्रीरङ्गनाथं संसेव्य भवसागरं तरामः।

**कावेरी वर्धतां काले काले वर्षतु वासवः।**
**श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम्।।**



# ध्यानम्

दर्शनशास्त्रेषु अन्यतममस्ति योगदर्शनम्। तत्र च महर्षिः पतञ्जलिः ''यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयः'' योगस्य अष्टाङ्गानि इत्यब्रवीत्। तत्र ध्यानं नाम 'प्रत्ययैकतानता' इत्युक्तम्। अर्थात् स्वस्य आन्तरिकजीवनेन साकं लयः, सामञ्जस्यस्थापनं च ध्यानमुच्यते चेतनायाः विकासः, इन्द्रियाणाम् अतिक्रमणं च ध्यानेनैव भवतः। स्वस्य विस्मरणाय, शून्यत्वप्राप्त्यै, पलायनं च कर्तुं ध्यानप्रक्रिया नास्ति। वस्तु-विषयकेन्द्रिताः मनसः अनुभूतयः भवन्ति, ताभ्यः अनुभूतिभ्यः ध्यानेन मार्गेण मनः उदासीनं भवति।

ध्यानं शरीरे अलौकिकीं गहनामवस्थां निर्माति, यया शरीरस्य विभिन्नाङ्गानि भारमुक्तानि, रोगमुक्तानि च भवन्ति। निद्रावस्थायाम् अस्माकं मनः विश्रान्तिं प्राप्तुं न शक्नोति, यतो हि निद्रावस्थायाम् तत् स्वपनादिषु कार्येषु रतं भवति। ध्यानावस्थायां यदा मनः सम्पूर्णं लीनं भवति, तदा तत् विश्रान्तिं प्राप्नोति। साधकः यदा ध्यानस्य एतादृशीम् अवस्थाम् एति, तदा सः घण्टात्रयस्य निद्रया अपि विश्रान्तिम् अनुभवति। ध्यानस्य च विभिन्नकेन्द्रेषु अनेकाः पद्धतयः प्रोक्ताः -

१. सङ्कल्पध्यानम्, २. श्वासध्यानम्, ३. चिदाकाशध्यानम् ४. मन्त्रध्यानम्, ५. अन्तर्मौनम्, ६. अजपाध्यानमित्यादयः। किन्तु भागवते तु,

**श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।**

इति नवविधभक्तिनिरूपणं कृतम्। तत्र तृतीयं भवति स्मरणात्मकं ध्यानम्। तच्च भगवद्विषयकयथार्थज्ञानेन भक्तिपूर्वकं भगवतः स्मरणात्मकम्। भगवद्ध्यानं एकधाट्या कर्तुं न शक्यते चेत् विष्णोः एकैकमवयवं चिन्तयेयुः। श्रीमदाचार्याः द्वादशस्तोत्रे प्रत्येकमप्यवयवं सक्रमं वर्णितवन्तः।

**तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा।**
**मनो निर्विषयं युङ्क्त्वा ततः किञ्चिन्न संस्मरेत्।**
**पदं तत्परमं विष्णोः मनो यत्र प्रसीदति।। इति** (२-१-११)

अस्य साधकाः विषयपदार्थेषु मनसः गमनं निरुध्य ध्यानरता भवेयुः इत्यर्थः न तु मनसि यत्किमपि न चिन्त्यमिति। यतः विषयत्वेन एकेन वस्तुना विना ध्यानम् अर्थात् स्मरणं चिन्तनमिति वा साध्यं किम्? अतः ''मनो निर्विषयम्'' इति वचसः ''भगवन्तं विहाय अन्यविषयाः न स्मर्तव्याः'' इत्यर्थः। विषयपदार्थैः मनः कलुषितं भवति। अशुद्धमनसि हरिः सम्यङ्न दृश्यते। यथा पात्रे पयः स्वच्छतया भवेत् चेत् आदौ पात्रं शुद्धं कर्तव्यम्। कश्मलविशिष्टं पात्रं चेत् पयः अपि कलुषितं भवति खलु! तद्वत् भगवद्रूपपयः, अस्माकं हृदयरूपे पात्रे स्थापनीयं चेत् हृदयप्रक्षालनं कृत्वा भगवत्स्मरणं कर्तव्यम्।

तथैव ''निर्विकल्पध्यानम्'' नाम भगवतः कीदृशोऽपि आकारः नास्तीति नार्थः। यतः तस्य आकारः तदभावश्च युज्यते। अप्राकृतचिन्मयरूपमस्ति, भौतिकरूपं नास्ति। एवं भगवत्सुन्दराकृतिं भागवतमेव वर्णयति। असत्योपासनया सत्यात्मकः परमात्मा प्राप्तुं न शक्यते। किन्तु अणुरेणुतृणकाष्ठेषु परिपूर्णतया विलीनस्य भगवतः सर्वविधाकृतिरपि अस्ति न तु विकृतिः। यथा पात्रस्थं जलं तत्तदाकृतिमाप्नोति तथा इत्यर्थः। तथा च समस्ते वस्तुनि भगवतः रूपमस्ति परन्तु तन्न जडरूपं, अस्वतन्त्रचेतनरूपं च। तत् स्वतन्त्रम् एकम् अप्राकृतं रूपम् तस्य।

अस्थि - मांसादियुतेषु प्राणिकोटिशरीरेषु एकं प्राकृतं रूपमस्ति। तादृशरूपाभावविशिष्टं परमात्मानं यः सन्ततं चिन्तयति तस्य भगवत्प्रीतिः, तेन च मुक्तिः लभ्यते।

एवञ्च ध्यानम् नाम समस्तप्रपञ्च विषयविरागबुद्धिपूर्वकं सकलगुणभरितसदानन्द-ज्ञानादिस्वरूपस्य ब्रह्मणः प्रीत्यै या अन्तःकरणीयप्रक्रिया सा इत्यर्थः।।





- श्री वि.प्रदीपकुमारः
चरवाणी - ९४९१६४६५३२





# तृष्णा तरुणायते

- कुमारी श्रुति के.बि.
चरवाणी - ९५६३२४२२८९

एकेन कृषीवलेन श्रुतम् यत् अमुके प्रदेशे कोऽपि जनः बृहतः भूभागस्य स्वामी भवितुम् अर्हति, यतः तत्र भूमिमूल्यम् अत्यल्पम् अस्ति, प्रायः नगण्यम् एव। सोऽचिन्तयत् - ईदृशाः दुर्लभाः अवसराः उपेक्षाम् न अर्हन्ति। बिलम्बेन को लाभः? मया तत्र गन्तव्यम् एव-इति सम्प्रधार्य वित्तम् आदाय तं प्रदेशं प्रति प्रचलितः, द्वाभ्याम् दिनाभ्यां च स तत्र प्राप्तः।

भूस्वामिनम् उपेत्य सः कृषीवलः भूमिं क्रेतुम् स्वीयाम् इच्छाम् प्रकटयन् तन्मूल्यं पृष्टवान्। भूस्वामी प्रत्यवदत् - अत्र भूमिक्रयण-सम्बन्धे द्वौ नियमौ पालनीयौ स्तः - तत्र प्रथमः सर्वं भूमिमूल्यं - एकसहस्रं मुद्राः प्रथमं देयं भवति। द्वितीयः - सूर्योदयात् आरभ्य आसूर्यास्तं यावती भूमिः पदातिना जनेन अतिक्राम्यते, तावती भूमिः तस्य भवति। किन्तु सूर्योदयवेलायाम् यस्मात् स्थानात् चल्यते, सूर्यस्य अस्तगमनात् पूर्वं तस्मिन् स्थाने अवश्यम् उपस्थातव्यम्। अन्यथा न भूमौ अधिकारः भवति न मुद्रासु। यदि रुचितं, मुद्राः दीयन्ताम्।

तेन कृषीवलेन सहर्षं मुद्राः दत्ताः। रात्रौ तत्र शयितम्। प्रभाते भूस्वामी तं कृषीवलं तां भूमिं दर्शयामास। कृषकस्य मनः विशालभू स्वामित्वकल्पनया ननर्त। बहवः दर्शका अपि तत्र एकत्रिता अभवन्। केचित् कर्मचारिणः अपि गन्तव्यमार्गे नियुक्ताः अभवन्। सूर्ये उदिते ढक्काशब्देन सह कृषकस्य भूयात्रा प्रारब्धा।

अथ असौ कृषकः मनसि कामनाजालं तन्वन् चलितुं प्रवृत्तः। अधिकाधिकां भूमिम् अधिग्रहीतुं तस्य चरणौ विद्युद्गतिकौ जातौ। प्रभातस्य शीतलमन्दमारुतेन सेव्यमानः असौ श्रमलेशम् अपि न अन्वभवत्। एकलः पदातिश्च प्रचलन् सः धावन् इव प्रतीयते स्म। एवम् अनारतं चलतः तस्य होरापञ्चकं यातम्।

शनैः शनैः अम्बरमणिः वियन्मध्यम् आरूढः। तस्य किरणानां प्रखरता अवर्धत। श्रान्तस्य अपि तस्य कृषकस्य उत्साहे मन्थरता न पदम् अधात्। ललाटन्तपे रवौ अपि सः अग्रे एव चलितुम् अत्यक्रामत्।

क्षणं विरम्य स पृष्ठतः अवालोकत। लङ्घितम् दीर्घम् अध्वानम् दृष्ट्वा सः महान्तं सन्तोषम् अविन्दत्। तदैव चिन्तायाः रेखा तस्य भाले आविरभूत् - सूर्यास्तगमनात् पूर्वम् उद्दिष्टस्थानं कथं प्राप्नुयाम् इति।

ततः तेन तस्मात् स्थानात् प्रतिनिवर्तनं निश्चितम्। क्षुधातुरस्य पिपासितस्य श्रान्तस्य च तस्य चरणौ नाग्रतः प्रसरतः स्म। किन्तु संकल्पितं वृथा मा भूत् इति धिया यथाकथञ्चित् प्रतिनिवर्तितुम् उत्साहं वबन्ध। यथा यथा असौ जवेन प्रयाति, मार्गो दीर्घदीर्घतरो भवति। पुनः पुनः चिन्तयति, नूनं लोभात् मया प्रभाते प्रभूताः गव्यूतयः लङ्घिताः

कयाऽपि प्रेरणया प्रधावन् सः गन्तव्यनिहितदृष्टिः अभवत्। क्षुधां पिपासां श्रमं च सर्वम् एकपदे विसस्मार।

भगवान् मरीचिमाली शनैः स्वकिरणान् संहरन् अस्ताचलं प्रति गन्तुं प्रवृत्तः। सम्प्रति तरुशिखरेषु तस्य अरुणाः रश्मयः विभान्ति स्म। इतः गन्तव्यं प्रति धावतः श्रमविवृतवदनस्य कृषकस्य दशा शोचनीया जाता। प्रमाणाधिकेन श्वासेन तस्य गतिः विचलिता अभूत्। उद्दिष्टस्थानं परितः दर्शकानां समवायः तार-स्वरेण तं कृषाणम् उत्साहयन् ब्रूते स्म धाव धाव, गन्तव्यं नास्ति दूरे।उत्साहं मा शिथिलय। द्वित्राः कलाः अवशिष्टाः। विजयस्व विजयस्व।

अतिकृच्छ्रेण पदानि निक्षिपन् असौ गन्तव्यम् आप, शिथिलो भूत्वा च भूमौ पपात। जनाः तम् परिवव्रुः। तस्य गात्रं पस्पृशुः। किन्तु तस्य प्राणविहगस्तु क्वापि उड्डीय विलीनतां गतः आसीत्।

स केवलं पञ्चहस्तपरिमितायाः भूमेः स्वामी अभवत्।

# नम्माळ्वार्


तेलुगु मूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.तुलसीप्रसादः
संस्कृतानुवादः - श्री वि.सुधीराचार्यः
चरवाणी - ७८४२१२०६४१


1 तिरुक्योरूर्क्षेत्रे कारि, उडयनङ्गै दम्पती स्तः। ताभ्यां श्रीकृष्णस्यानुग्रहात् कारिमारन् जनितवान्। सः बालः सामान्यतया नास्ति। तौ दम्पती देवालयं गत्वा...




मन्दिरान्तर्भागात् आकाशवाणीं श्रुतवन्तौ तौ दम्पती... 4

भक्त! तव कुमारः कारणजन्मा विष्णोः सेनापतेः विष्वक्सेनस्य अंशेन अजायत। तिन्त्रिणीवृक्षस्य अधः १६ वर्षाणि यावत् मौनेन तिष्ठति। 5




7 पुनरप्याकाशवाण्याम्....







१६ वर्षाणि व्यतीतानि। मारन् साकं प्रथमतया मधुरकविः अभाषत। 11






15 स्वविषयककीर्तनानि श्रुत्वा श्रीरङ्गनाथः स्वयं प्रमोदमाप्नोति स्म। स्वामी स्वयमागत्य...




18 नम्माळ्वार् पादस्य अन्त्यकालः सम्पन्नः। तदा श्रीरङ्गनाथः प्रत्यक्षः सन्...










।। लोकाः समस्ताः सुखिनो भवन्तु।।

नीचो वदति न कुरुते वदति न साधु करोत्येव।



अस्य चित्रपटस्य रञ्जनं कुर्मः वा?



प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?



## चित्रलेखनम्





## रसप्रश्नाः

१. अभिमन्योः पुत्रस्य नाम किम्?

अ. परीक्षितः आ. जनमेजयः

इ. शुकः ई. उल्कामुखः

२.द्रौपदी कस्य देशस्य राजकुमारी?

अ. विदर्भस्य आ. कोसलस्य

इ. पांचालस्य ई. इन्द्रप्रस्थस्य

३. द्रोणाचार्यस्य पिता कः?

अ. कपिलः आ. भारद्वाजः

इ. गौतमः ई. वशिष्ठः

४.जरासन्धः कस्य देशस्य राजा?

अ. पांचालस्य आ. इन्द्रप्रस्थस्य

इ. कोसलस्य ई. मगधस्य

समाधानानि - १. अ २. इ ३. आ ४. ई








Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.



प्रायः समापन्नविपत्तिकाले धियोऽपि पुंसां मलिनीभवन्ति।




दि.०५-०५-२०२२ तिरुपतौ श्री वेङ्कटेश्वर इन्स्टिट्यूट् आफ् क्यान्सर् चिकित्सालयस्य प्रारम्भोत्सवे आन्ध्रप्रदेशस्य मान्यमुख्यमन्त्रिणः श्री वै.यस्.जगन्मोहन् रेड्डि महाभागाः तथा इतरोन्नताधिकारिणश्च।



दि.०५.०५.२०२२ श्री पद्मावति चिन्नपिल्लल सूपर् स्पेषालिटी चिकित्सालयः, तिरुपति शिलाफलकाविष्करणे तथा भूमिपूजायां च आन्ध्रप्रदेशस्य गौरवमुख्यमन्त्रिणः श्री वै.यस्.जगन्मोहन् रेड्डि तदितरप्रमुखाः




दि.०५.०५.२०२२ तिरुपति, श्री वेङ्कटेश्वर भक्ति चानल् मध्ये एफ्.एम्. रेडियो चिह्नस्य (Logo) तथा श्रीनिवाससेतोः प्रारम्भोत्सवे आन्ध्रप्रदेशस्य गौरवमुख्यमन्त्रिणः श्री वै.यस्.जगन्मोहन् रेड्डि तदितरमन्त्रिणः, प्रमुखाः अधिकारिणश्च भागं स्वीचक्रुः।



दि.०५.०५.२०२२ श्रीनिवासमङ्गापुरम्, श्रीवारि मेट्टु मार्गस्य पुनःप्रारम्भोत्सवे ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री.वै.वि.सुब्बारेड्डि तथा इतरोन्नताधिकारिणश्च।

दि.२१.०४.२०२२ ति.ति.दे. पालकमण्डल्याः एक्स् अफिषियो सभ्यत्वेन पदवीस्वीकर्तारः श्रीमन्तः अनिल् कुमार् सिंघाल्, I.A.S. The Principal Secretary of Revenue Endowments of Andhra Pradesh.

दि.०८.०५.२०२२ ति.ति.दे. कार्यनिर्वहणाधिकारित्वेन (F.A.C.) पदवीस्वीकर्तारः श्री ए.वि.धर्मारेड्डि (I.D.E.S.) महोदयाः।

